॥ श्रीरस्तु ॥

श्रीमद्वाल्मीकिरामायणे

# ॥ सुन्दरकाण्डः ॥



चेन्नपुर्यां

वाविळ्ळ. रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकटितः

श्रीरस्तु ॥

## ॥ श्रीमत्सुन्दरकाण्डपठनश्रवणादिफलम् ॥

ब्रह्माण्डे—ततो रावणनीताया स्सीताया श्शत्रुकर्शनः ।
इति श्लोकं समाकर्ण्य कार्यसिद्धिं लभे न्नरः ॥
सुन्दरादिमसर्गस्थहनूमद्विक्रमादिकम् ।
श्रुत्वापस्मारकुष्ठादिभूतभेताळनाशनम् ॥
स निर्जित्य पुरीं श्रेष्ठा मिति श्लोकादिमाक्षरम् ।
श्रुत्वा बन्धा द्विमुक्त स्सन्ब्रह्मभूयाय कल्पते ॥
सीतासंदर्शनं श्रुत्वा वीतशोको भविष्यति ।
श्रुत्वातु त्रिजटास्वप्नं दुस्स्वप्नो नश्यति ध्रुवम् ॥
श्रीराममुद्रिकादानं ये शृण्वंत्यादरेण तु ।
निर्जित्य शत्रून्संग्रामे स्थिरं राज्यं व्रजंति ते ॥
धन्या देवा स्सगंधर्वा स्सिद्धा इत्यत्र चादिमम् ।
श्रुत्वा चतुर्दशं वर्ण मसंगो वायुव च्चरेत् ॥
हनूमद्ग्रहणं श्रुत्वा बन्धा न्मुच्येत मानवः ।
लङ्कादाहाद्यनुश्रुत्वा तापत्रयहति र्भवेत् ॥
मङ्गळाभिमुखी त्यस्मिन् श्लोके यत्प्रथमाक्षरम् ।
तद्गायत्र्याः पञ्चदशं श्रुत्वा मद्रूपभाग्भवेत् ॥
श्रुत्वा तु पञ्चमं काण्डं हनूमद्विजयांकितम् ।
आंजनेयप्रसादेन ब्रह्मलोकं सगच्छति ॥
काण्डस्य सुन्दराख्यस्य श्रवणा त्पठना दपि ।
मां प्राप्नुया ज्जगद्धेतुं नात्र संदेह इष्यते ॥

॥ श्रीः ॥

## स्मार्तादीनांसर्वेषां
## श्रीरामायणपारायणादौ कर्तव्यपूजाविधानम् ॥

---

आचम्य। प्राणानायम्य। ममोपात्त...शुभे शोभने मुहूर्ते अस्यां शुभतिथौ श्रीसीतालक्ष्मणभरतशत्रुघ्न हनुमत्समेत श्रीरामचन्द्र-देवता प्रीत्यर्थं यावच्छक्तिध्यानावाहनादिषोडशोपचारपूजां करिष्ये॥ आदौ निर्विघ्नेन परिसमाप्त्यर्थं गणाधिपतिपूजां करिष्ये तदंगत्वेन कलशपूजां करिष्ये (कलशपूजां गणपतिपूजां च कृत्वा)

वैदेहीसहितं सुरद्रुमतले हैमे महामंटपे
मध्येपुष्पक मासने मणिमये वीरासने सुस्थितम्।
अग्रे वाचयति प्रभंजनसुते तत्त्वं मुनिभ्यः परं
व्याख्यांतं भरतादिभिः परिवृतं रामंभजे श्यामलम् ॥

तत श्श्रीमत्कोशोपरि श्रीरामध्यानावाहनादिनैवेद्यांतपूजा विधेया। श्रीसितारामचन्द्रदेवताभ्यां नमः (ध्यानावाहनादिषोडशोपचारपूजां च कृत्वा)

---

## ॥ श्रीमत्सुन्दरकाण्डमहामन्त्रानुष्ठानक्रमः ॥

---

अस्य श्रीसुन्दरकाण्ड महामन्त्रस्य। वाल्मीकीऋषिः आंजने-यो देवता। रामदूताय कपय इति बीजं। नमो वातात्मजाय इति

शक्तिः । समुद्रतारकाय इति कीलकं । सर्वानिष्टनिवारणार्थे सर्वाभीष्ट सिद्ध्यर्थे सुन्दरकाण्डपारायणे जपे विनियोगः उदधिक्रमिणे तुभ्यं नमो राक्षसमर्दिने । अंगुष्ठाभ्यां नमः ॥ छायाग्रहविनाशाय सुरसा मारकायच । तर्जनीभ्यां नमः॥मैनाकदर्शिनेतुभ्यं मैनाक गिरिमानिने । मध्यमाभ्यां नमः ॥ आकाशगामिने देवमानिने सर्वदायिने । अनामिकाभ्यां नमः ॥ वायुपुत्रायधीराय लङ्कादर्पापहारिणे । कनिष्ठिकाभ्यां नमः ॥ अक्षहन्त्रे नमस्तुभ्यं पुच्छवह्निप्रदीपिने । करतलकरपृष्ठाभ्यां नमः ॥ उदधि....मर्दिने । हृदयाय नमः ॥ छाया...काय च । शिरसेस्वाहा॥मैनाका...मानिने । शिखायै वौषट् ॥ आकाश... यिने । कवचाय हुं ॥ वायुपुत्राय...हारिणे । नेत्रत्रयाय वौषट् ॥ अक्षहंत्रे...पिने । अस्त्राय फट् ॥ अष्टमंत्रिसुतानां च गर्वभङ्गकृते नमः ॥ भूर्भुवस्सुवरो मिति दिग्बन्धः ॥

ध्यानम्—सर्वानिष्टनिवारकं शुभकरंपिंगाक्षमक्षापहं
सीतान्वेषणतत्परं कपिवरं कोटीन्दुसूर्यप्रभम् ।
लङ्काद्वीपभयङ्करं सकलदं सुग्रीवसम्मानिनं
देवेन्द्रादिसमस्तदेवविनुतं काकुत्स्थ दूतं भजे ॥
बुद्धि र्बलं यशोधैर्यं निर्भयत्व मरोगता ।
अजाड्यं वाक्पटुत्वं च हनूमत्स्मरणा द्भवेत् ॥

श्रीवैष्णवानां

## ॥ श्रीमद्रामायणपठनोपक्रमानुसंधेयक्रमः ॥

प्रथमतः 'श्रीशैलेशे'त्यादि स्वस्वसंप्रदायनिर्वाहकाचार्यानुसंधानं। ततः 'लक्ष्मीनाथे'त्यारभ्य 'प्रणतोऽस्मिनित्य' मित्यंतं। अनंतरं श्रीशैलपूर्णविषयं 'पितामह'स्येति श्लोकमारभ्य श्रीभाष्यकार प्रभृतिस्वाचार्यपर्यंतविषया स्सांप्रदायिकश्लोका अनुसंधेयाः। यद्वा श्रीधरादिस्वाचार्यपर्यंताः प्रतिव्यक्तिश्लोका अनुसंधेयाः। ततः—

कूजंतं राम रामेति मधुरं मधुराक्षरम्।<br>
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः।<br>
शृण्वन्रामकथानादं को न याति परां गतिम् ॥

यः पिबन्सततं रामचरितामृतसागरम्।<br>
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम्।<br>
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥

अञ्जनानंदनं वीरं जानकीशोकनाशनम्।<br>
कपीश मक्षहंतारं वन्दे लङ्काभयंकरम् ॥

मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम्।<br>
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

उल्लंघ्यसिंधो स्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लंकां नमामि तं प्रांजलि रांजनेयम् ॥
आंजनेय मतिपाटलाननं कांचनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥
यत्रयत्ररघुनाथकीर्तनं तत्रतत्रकृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिंनमतराक्षसांतकम् ॥
वेदवेद्ये परेपुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासी त्साक्षा द्रामायणात्मना ॥
तदुपगतसमाससंधियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधंनिशामयध्वम् ॥
श्रीराघवं दशरथात्मज मप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहु मरविंददळायताक्षं रामं निशाचरविनाशकरं नमामि ॥
वैदेहीसहितं सुरद्रुमतले हैमे महामंटपे
मध्येपुष्पक मासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभंजनसुते तत्त्वं मुनिभ्यः परं
व्याख्यांतं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम ।

## ॥ पारायणसमापनक्रमः ॥

एव मेतत्पुरावृत्त माख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषा मिंदीवरश्यामो हृदये सुप्रतिष्ठितः ॥
काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्संतु निर्भयाः ॥
कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरंगनाथो जयतु श्रीरंग श्री श्च वर्धताम् ॥
स्वस्तिप्रजाभ्यः परिपालयंतां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्य श्शुभमस्तु नित्यं लोका स्समस्ता स्सुखिनो भवंतु ॥
मंगळं कोसलेंद्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मंगळम् ॥
वेदवेदांतवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मंगळम् ॥
विश्वामित्रांतरंगाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मंगळम् ॥
पितृभक्ताय सततं भ्रातृभि स्सह सीतया ।
नंदिताखिललोकाय रामभद्राय मंगळम् ॥
त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मंगळम् ॥
सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मंगळम् ॥
दंडकारण्यवासाय खंडितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मंगळम् ॥

सादरं शबरीदत्त फलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मंगळम् ॥

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मंगळम् ॥

श्रीमते रघुवीराय सेतूल्लंघितसिंधवे ।
जितराक्षसराजाय रणधीराय मंगळम् ॥

आसाद्य नगरीं दिव्या मभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मंगळम् ॥

मंगळाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वै राचार्यै स्सत्कृतायास्तु मंगळम् ॥

ततः पितामहस्येत्यारभ्य स्वाचार्यांताश्श्लोका अनु संधेयाः ॥

---

## ॥ श्रीस्मार्तमध्वादीनां श्रीमद्रामायणपठनोपक्रमानुसंधेयक्रमः ॥

---

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्याये त्सर्वविघ्नोपशांतये ॥

वागीशाद्या स्सुमनस स्सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्त न्नमामि गजाननम् ॥

ततः श्रीमच्छङ्कराचार्यादिगुरुपरंपराऽनुसंधेया ॥

दोर्भिर्युक्ताचतुर्भिस्स्फटिकमणिमयी मक्षमालांदधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।

भासा कुन्देन्दुशंखस्फटिकमणिनिभा भासमाना समाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥
कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को नयाति परां गतिम् ॥
यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतस मकल्मषम् ॥
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥
अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीश मक्षहंतारं वन्दे लङ्काभयङ्करम् ॥
उल्लंघ्य सिंधो स्सलिलं सलीलं य श्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लंकां नमामि तं प्रांजलि रांजनेयम् ॥
आंजनेय मतिपाटलाननं कांचनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्रकृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिंनमतराक्षसांतकम् ॥
मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥
यः कर्णांजलिसंपुटै रहरह स्सम्य क्पिबत्यादरा-
द्वाल्मीके र्वदनारविंदगलितं रामायणाख्यं मधु ।

जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥
तदुपगतसमास संधियोगं सममधुरोपनतार्थ वाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥
वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥
श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् ।
कांडग्राहमहामीनं वंदे रामायणार्णवम् ॥
वेदवेद्ये परेपुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसा दासीत्साक्षा द्रामायणात्मना ॥
वैदेहीसहितं सुरद्रुमतले हैमे महामंटपे
मध्येपुष्पक मासने मणिमये वीरासने सुस्थितम् ।
अग्रेवाचयति प्रभंजनसुते तत्त्वं मुनिभ्यः परं
व्याख्यांतं भरतादिभिः परिवृतं रामंभजे श्यामलम् ॥
वामे भूमिसुता पुरश्च हनुमान्पश्चात्सुमित्रासुत-
श्शत्रुघ्नो भरतश्च पार्श्वदळयो र्वाव्यादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जांबवा-
न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥
नमोऽस्तु रामाय स लक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेंद्रयमानिलेभ्यो नमोऽस्तु चंद्रार्कमरुद्गणेभ्यः ॥

ततः श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यांतपूजा विधेया ।
पारायणावसाने च पुनः पूजा कर्तव्या ॥

## ॥ पारायणसमापनसमयानुसंधेयक्रमः ॥



स्वस्ति प्रजाभ्यः परिपालयंतां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकास्समस्ता स्सुखिनो भवंतु ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्संतु निर्भयाः ॥

अपुत्राः पुत्रिण स्संतु पुत्रिणस्संतु पौत्रिणः ।
अधना स्सधना स्संतु जीवंतु शरदां शतम् ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैक मक्षरं प्रोक्तं महापातकनाशनम् ॥

शृण्वन्रामायणं भक्त्या यः पादं पद मेव वा ।
स याति ब्रह्मण स्स्थानं ब्रह्मणा पूज्यते सदा ॥

रामाय रामभद्राय रामचंद्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥

यन्मंगळं सुपर्णस्य विनताऽकल्पय त्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मंगळम् ॥

मंगळं कोसलेंद्राय महनीयगुणात्मने ।
चक्रवर्तितनूजाय सार्वभौमाय मंगळम् ॥

अमृतोत्पादनेदैत्यान्घ्नतो वज्रधरस्य यत् ।
अदिति र्मंगळं प्रादा त्तत्ते भवतु मंगळम् ॥

त्रीन्विक्रमान्प्रक्रमतो विष्णो रमिततेजसः ।
यदासी न्मंगळं राम तत्ते भवतु मंगळम् ॥

ऋतव स्सागरा द्वीपा वेदा लोका दिशश्चते ।
मंगळानि महाबाहो दिशंतु तव सर्वदा ॥

कायेन वाचा मनसेंद्रियैर्वा बुद्ध्याऽऽत्मनावाप्रकृते स्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥



## ॥ गायत्रीरामायणम् ॥

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥ १
स हत्वा राक्षसान्सर्वान्यज्ञघ्नान्रघुनन्दनः ।
ऋषिभिः पूजित स्सम्य ग्यथेंद्रोविजयी पुरा ॥ २
विश्वामित्र स्सधर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघव मब्रवीत् ॥ ३
तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ।
शयनीयं नरेंद्रस्य तदासाद्य व्यतिष्ठत ॥ ४
वनवासं हि संख्याय वासांस्याभरणानि च ।
भर्तार मनुगच्छंत्यै सीतायै श्वशुरो ददौ ॥ ५
राजा सत्यं च धर्मं च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ६
निरीक्ष्य स मुहूर्तं तु ददर्शभरतो गुरुम् ।
उटजे राम मासीनं जटावल्कलधारिणम् ॥ ७
यदि बुद्धिः कृता द्रष्टु मगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महायशाः ॥ ८
भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो ।
मृगरूप मिदं व्यक्तं विस्मयं जनयिष्यति ॥ ९
गच्छ शीघ्र मितो राम सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्र मितो गत्वाऽद्य राघव ॥ १०

देशकालौ प्रतीक्षस्व क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगो भव ॥ ११
वंद्या स्तेतु तपस्सिद्धा स्तपसा वीतकल्मषाः ।
प्रष्टव्या श्चापि सीतायाः प्रवृत्तिं विनयान्वितैः ॥ १२
स निर्जित्य पुरीं श्रेष्ठां लंकां तां कामरूपिणिम् ।
विक्रमेण महातेजा हनुमान्मारुतात्मजः ॥ १३
धन्या देवा स्सगंधर्वा सिद्धाश्च परमर्षयः ।
मम पश्यंति ये नाथं रामं राजीवलोचनम् ॥ १४
मंगळाभिमुखी तस्य सा तदासी न्महाकपेः ।
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ॥ १५
हितं महार्थं मृदुपूर्वसंहितं व्यतीतकालायति संप्रतिक्षमम् ।
निशम्य तद्वाक्य मुपस्थितज्वरः प्रसंगवा नुत्तर मेत दब्रवीत् ॥ १६
धर्मात्मा रक्षसां श्रेष्ठ स्संप्राप्तोऽयं विभीषणः ।
लंकैश्वर्यं ध्रुवं श्रीमा नयं प्राप्नोत्यकंटकम् ॥ १७
यो वज्रपाताशनिसन्निपाता न्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्त श्चचाल चापंच मुमोच वीरः ॥ १८
यस्य विक्रम मासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायण मनामयम् ॥ १९
न ते ददृशिरे रामं दहंत मरिवाहिनीम् ।
मोहिताः परमास्त्रेण गांधर्वेण महात्मना ॥ २०
प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धांजलिपुटा चेद मुवाचाग्निसमीपतः ॥ २१

चलना त्पर्वतेंद्रस्य गणा देवाश्च कंपिताः ।
चचाल पार्वती चापि तदाश्लिष्टा महेश्वरम् ॥ २२

दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभाजनम् ।
सर्वमेवा विभक्तं नो भविष्यति हरीश्वर ॥ २३

या मेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् ।
तामेव रात्रिं सीताऽपि प्रसूता दारकद्वयम् ॥ २४

इदं रामायणं कृत्स्नं गायत्रीबीजसंयुतम् ।
त्रिसंध्यं यःपठे न्नित्यं सर्वपापैः प्रमुच्यते ॥ २५

गायत्रीरामायणं संपूर्णम् ॥



## ॥ देवताप्रार्थना ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्याये त्सर्वविघ्नोपशान्तये ॥
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥

## ॥ वाल्मीकिप्रार्थना ॥

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं कोन याति परां गतिम् ॥

## ॥ आंजनेयप्रार्थना ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीश मक्षहंतारं वन्दे लङ्काभयंकरम् ॥
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥
मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

## ॥ श्रीरामायणप्रशंसा ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसा दासी त्साक्षा द्रामायणात्मना ॥

श्रीमद्ब्रह्मतदेव बीज ममलं यस्याङ्कुर श्चिन्मयः
काण्डै स्सप्तभि रन्वितोऽतिविततो ऋष्यालवालोदितः ।
पत्रैस्तत्त्वसहस्रकै स्सुविलसच्छाखाशतैः पञ्चभिः
स्वात्मप्राप्तिफलप्रदो विजयते रामायणस्वस्तरुः ॥

यः कर्णाञ्जलिसंपुटै रहरह स्सम्य क्पिबत्यादरा
द्वाल्मीके र्वदनारविंदगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमा न्विष्णोः पदं शाश्वतम् ॥

वाल्मीकिगिरिसंभूता रामांभोनिधिसंगता ।
श्रीमद्रामायणी गंगा पुनातु भुवनत्रयम् ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैक मक्षरं प्रोक्तं महापातकनाशनम् ॥

॥ श्रीरस्तु ॥

# श्रीमद्रामायणे-सुन्दरकाण्डे

## ॥ प्रथमस्सर्गः ॥

ततो रावणनीतायास्सीतायाश्शत्रुकर्शनः ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १
दुष्करं निष्प्रतिद्वंद्वं चिकीर्षन् कर्म वानरः ।
समुदग्रशिरोग्रीवो गवाम्पतिरिवाबभौ ॥ २
अथ वैडूर्यवर्णेषु शाद्वलेषु महाबलः ।
धीर स्सलिलकल्पेषु विचचार यथासुखम् ॥ ३
द्विजा न्वित्रासयन् धीमा नुरसा पादपान् हरन् ।
मृगांश्च सुबहू न्निघ्नन् प्रवृद्ध इव केसरी ॥ ४
नीललोहितमाञ्जिष्ठपत्रवर्णै स्सितासितैः ।
स्वभावविहितै श्चित्रै र्धातुभि स्समलङ्कृतम् ॥ ५
कामरूपिभि राविष्ट मभीक्ष्णं सपरिच्छदैः ।
यक्षकिन्नरगन्धर्वै र्देवकल्पै श्च पन्नगैः ॥ ६
स तस्य गिरिवर्यस्य तले नागवरायुते ।
तिष्ठन् कपिवर स्तत्र ह्रदे नाग इवाबभौ ॥ ७
ससूर्याय महेन्द्राय पवनाय स्वयम्भुवे ।
भूतेभ्य श्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥ ८

अञ्जलिं प्राङ्मुखः कृत्वा पवनायात्मयोनये।
ततो हि ववृधे गन्तुं दक्षिणो दक्षिणां दिशम् ॥ ९
प्लवङ्गप्रवरै र्दृष्टः प्लवने कृतनिश्चयः।
ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥ १०
*निष्प्रमाणशरीरस्सन् लिलङ्घयिषु रर्णवम्।
बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥ ११
स चचालाचल श्चापि मुहूर्तं कपिपीडितः।
तरूणां पुष्पिताग्राणां सर्वं पुष्प मशातयत् ॥ १२
तेन पादपमुक्तेन पुष्पौघेण सुगन्धिना।
सर्वत स्संवृत श्शैलो बभौ पुष्पमयो यथा ॥ १३
तेन चोत्तमवीर्येण पीड्यमान स्स पर्वतः।
सलिलं संप्रसुस्राव मदं मत्त इव द्विपः ॥ १४
पीड्यमानस्तु बलिना महेन्द्रस्तेन पर्वतः।
रीती र्निर्वर्तयामास काञ्चनाञ्जनराजतीः ॥ १५
मुमोच च शिला श्शैलो विशाला स्समनश्शिलाः।
मध्यमेनार्चिषा जुष्टो धूमराजीरिवानलः ॥ १६
गिरिणा पीड्यमानेन पीड्यमानानि सर्वतः।
गुहाविष्टानि भूतानि विनेदु र्विकृतै स्स्वरैः ॥ १७
स महासत्त्वसन्नाद श्शैलपीडानिमित्तजः।
पृथिवीं पूरयामास दिश श्चोपवनानि च ॥ १८
शिरोभिः पृथुभि स्सर्पा व्यक्तस्वस्तिकलक्षणैः।
वमन्तः पावकं घोरं ददंशु र्दशनै श्शिलाः ॥ १९

स्तास्तदा सविषै र्दष्टाः कुपितै स्तै र्महाशिलाः।
जज्वलुः पावकोद्दीप्ता बिभिदु श्च सहस्रधा ॥ २०
यानि चौषधजालानि तस्मिन् जातानि पर्वते।
विषघ्नान्यपि नागानां न शेकु श्शमितुं विषम् ॥ २१
[अपरेतु महाकाया वमन्तोऽग्निं स्वतेजसा।
कन्दरेभ्यो विनिष्पेतुः कपिपादनिपीडिताः॥
गिरेराक्रममाणस्य तरव स्तरुणाङ्कुराः।
मुमुचुः पुष्पवर्षाणि व्यक्त मुत्पलगन्धिनः॥
गैरिकाञ्जनसञ्जुष्टा हरितालसमावृताः।
व्यदीर्यन्त गिरे स्तस्य शिला स्ता स्समनश्शिलाः॥
सचन्दनारुण स्ताम्र श्चित्रैः काननधातुभिः।
क्षिप्तः शिखिनिभै र्दीपै र्दीप्तगैरिकधातुभिः॥]
भिद्यतेऽयं गिरि र्भूतै रिति मत्वा तपस्विनः।
त्रस्ता विद्याधरा स्तस्मा दुत्पेतु स्स्त्रीगणै स्सह ॥ २२
पानभूमिगतं हित्वा हैम मासवभाजनम्।
पात्राणि च महार्हाणि करकां श्च हिरण्मयान् ॥ २३
लेह्यानुच्चावचा न्भक्ष्या न्मांसानि विविधानि च।
आर्षभाणिच चर्माणि खड्गांश्च कनकत्सरून् ॥ २४
कृतकण्ठगुणाः क्षीबा रक्तमाल्यानुलेपनाः।
रक्ताक्षाः पुष्कराक्षा श्च गगनं प्रतिपेदिरे ॥ २५
हारनूपुरकेयूरपारिहार्यधराः स्त्रियः।
विस्मिता स्सस्मिता स्तस्थु राकाशे रमणै स्सह ॥ २६

दर्शयंतो महाविद्यां विद्याधरमहर्षयः ।
सहिता स्तस्थु राकाशे वीक्षां चक्रुश्च पर्वतम् ॥ २७
शुश्रुवु श्च तदा शब्द मृषीणां भावितात्मनाम् ।
चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥ २८
एष पर्वतसंकाशो हनुमान्मारुतात्मजः ।
तितीर्षति महावेग स्समुद्रं मकरालयम् ॥ २९
रामार्थं वानरार्थं च चिकीर्षन् कर्म दुष्करम् ।
समुद्रस्य परं पारं दुष्प्रापं प्राप्तु मिच्छति ॥ ३०
इति विद्याधरा श्श्रुत्वा वच स्तेषां महात्मनाम् ।
त मप्रमेयं ददृशुः पर्वते वानरर्षभम् ॥ ३१
दुधुवे च सरोमाणि चकंपे चाचलोपमः ।
ननाद सुमहानादं सुमहा निव तोयदः ॥ ३२
आनुपूर्व्येण वृत्तं च लाङ्गूलं लोमभि श्चितम् ।
उत्पतिष्य न्विचिक्षेप पक्षिराज इवोरगम् ॥ ३३
तस्य लाङ्गूल माविद्ध मात्तवेगस्य पृष्ठतः ।
ददृशे गरुडेनेव ह्रियमाणो महोरगः ॥ ३४
बाहू सम्स्तम्भयामास महापरिघसन्निभौ ।
अससाद ॥ कपिः कट्यां चरणौ सञ्चुकोच च ॥ ३५
संहृत्य च भुजौ श्रीमान्तथैव च शिरोधराम् ।
तेज स्सत्त्वं तथा वीर्य माविवेश स वीर्यवान् ॥ ३६
मार्ग मालोकयन् दूरा दूर्ध्वं प्रणिहितेक्षणः ।
रुरोध हृदये प्राणा नाकाश मवलोकयन् ॥ ३७

पद्भ्यां दृढ मवस्थानं कृत्वा स कपिकुंजरः ।
निकुंच्य कर्णौ हनुमा नुत्पतिष्यन्महाबलः ॥ ३८
वानरा न्वानरश्रेष्ठ इदं वचन मब्रवीत् ।
यथा राघवनिर्मुक्त श्शरश्श्वसनविक्रमः ॥ ३९
गच्छे त्तद्वद्गमिष्यामि लंकां रावणपालिताम् ।
नहि द्रक्ष्यामि यदि तां लंकायां जनकात्मजाम् ॥ ४०
अनेनैव हि वेगेन गमिष्यामि सुरालयम् ।
यदि वा त्रिदिवे सीतां न द्रक्ष्याम्यकृतश्रमः ॥ ४१
बद्ध्वा राक्षसराजान मानयिष्यामि रावणम् ।
सर्वथा कृतकार्योऽह मेष्यामि सह सीतया ॥ ४२
आनयिष्यामि वा लंकां समुत्पाट्य सरावणाम् ।
एव मुक्त्वा तु हनुमान्वानरा न्वानरोत्तमः ॥ ४३
उत्पपाताथ वेगेन वेगवा नविचारयन् ।
सुपर्ण मिव चात्मानं मेने स कपिकुंजरः ॥ ४४
समुत्पतति तस्मि स्तु वेगात्ते नगरोहिणः ।
संहृत्य विटपान् सर्वान् समुत्पेतु स्समंततः ॥ ४५
समत्तकोयष्टिभकान् पादपान् पुष्पशालिनः ।
उद्वहन्नूरुवेगेन जगाम विमलेऽम्बरे ॥ ४६
ऊरुवेगोद्धता वृक्षा मुहूर्तं कपि मन्वयुः ।
प्रस्थितं दीर्घ मध्वानं स्वबंधुमिव बान्धवाः ॥ ४७
त मूरुवेगोन्मथिता स्साला श्चान्ये नगोत्तमाः ।
अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥ ४८

सुपुष्पिताग्रै र्बहुभिः पादपै रन्वितः कपिः ।
हनुमा न्पर्वताकारो बभूवाद्भुतदर्शनः ॥ ४९
सारवन्तोऽथ ये वृक्षा न्यमज्जन्लवणाम्भसि ।
भया दिव महेन्द्रस्य पर्वता वरुणालये ॥ ५०
स नानाकुसुमैः कीर्णः कपि स्साङ्कुरकोरकैः ।
शुशुभे मेघसङ्काशः खद्योतै रिव पर्वतः ॥ ५१
विमुक्ता स्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः ।
अवशीर्यंत सलिले निवृत्ता स्सुहृदो यथा ॥ ५२
लघुत्वेनोपपन्नं त द्विचित्रं सागरेऽपतत् ।
द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम् ॥ ५३
ताराशत मिवाकाशं प्रबभौ स महार्णवः ।
पुष्पौघेनानुबद्धेन नानावर्णेन वानरः ॥ ५४
बभौ मेघ इवाकाशे विद्युद्गणविभूषितः ।
तस्यवेगसमाधूतैः पुष्पै स्तोय मदृश्यत ॥ ५५
ताराभि रभिरामाभि रुदिताभि रिवांबरम् ।
तस्यांबरगतौ बाहू ददृशाते प्रसारितौ ॥ ५६
पर्वताग्राद्विनिष्क्रांतौ पंचास्या विव पन्नगौ ।
पिबन्निव बभौ चापि सोर्मि मालं महार्णवम् ॥ ५७
पिपासु रिव चाकाशं ददृशे स महाकपिः ।
तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः ॥ ५८
नयने विप्रकाशेते पर्वतस्था विवानलौ ।
पिंगे पिंगाक्षमुख्यस्य बृहती परिमंडले ॥ ५९

चक्षुषी संप्रकाशेते चंद्रसूर्या विवोदितौ ।
मुखं नासिकया तस्य ताम्रया ताम्र माबभौ ॥ ६०
संध्यया समभिस्पृष्टं यथा तत्सूर्य मंडलम् ।
लांगूलं च समाविद्धं प्लवमानस्य शोभते ॥ ६१
अंबरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितम् ।
लांगूलचक्रेण महान् शुक्लदंष्ट्रोऽनिलात्मजः ॥ ६२
व्यरोचत महाप्राज्ञः परिवेषीव भास्करः ।
स्फिग्देशेनाभिताम्रेण रराज स महाकपिः ॥ ६३
महता दारितेनेव गिरि गैरिकधातुना ।
तस्य वानरसिंहस्य प्लवमानस्य सागरम् ॥ ६४
कक्षांतरगतो वायु र्जीमूत इव गर्जति ।
खेयथा निपतंत्युल्का ह्युत्तरांता द्विनिस्सृता ॥ ६५
दृश्यते सानुबंधा च तथा स कपिकुंजरः ।
पतत्पतंगसंकाशो व्यायत श्शुशुभे कपिः ॥ ६६
प्रवृद्धइव मातंगः कक्ष्यया बद्ध्यमानया ।
उपरिष्टाच्छरीरेण छायया चावगाढया ॥ ६७
सागरे मारुताविष्टा नौ रिवासीत्तदा कपिः ।
यं यं देशं समुद्रस्य जगाम स महाकपिः ॥ ६८
सस तस्योरुवेगेन सोन्माद इव लक्ष्यते ।
सागरस्योर्मिजालाना मुरसा शैलवर्ष्मणाम् ॥ ६९
अभिघ्नंस्तु महावेगः पुप्लुवे स महाकपिः ।
कपिवातश्च बलवान् मेघवातश्च निस्सृतः ॥ ७०

सागरं भीमनिर्घोषं कंपयामासतु भृशम् ।
विकर्षन्नूर्मिजालानि बृहंति लवणांभसि ॥ ७१
पुप्लुवे कपिशार्दूलो विकिरन्निव रोदसी ।
मेरुमंदरसंकाशा नुद्धतान् स महार्णवे ॥ ७२
अतिक्रामन्महावेग स्तरंगान् गणयन्निव ।
तस्य वेगसमुद्भूतं जलं स जलदं तदा ॥ ७३
अंबरस्थं विबभ्राज शारदाभ्रमिवाततम् ।
तिमिनक्रझषाः कूर्मा दृश्यंते विवृता स्तदा ॥ ७४
वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम् ।
प्लवमानं समीक्ष्याथ भुजंगा स्सागरालयाः ॥ ७५
व्योम्नि तं कपिशार्दूलं सुपर्ण इति मेनिरे ।
दशयोजनविस्तीर्णा त्रिंशद्योजन मायता ॥ ७६
छाया वानरसिंहस्य जले चारुतराऽभवत् ।
श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ॥ ७७
तस्य सा शुशुभे छाया वितता लवणांभसि ।
शुशुभे स महातेजा महाकायो महाकपिः ॥ ७८
वायुमार्गे निरालंबे पक्षवा निव पर्वतः ।
येनासौ याति बलवान् वेगेन कपिकुंजरः ॥ ७९
तेनमार्गेण सहसा द्रोणीकृत इवार्णवः ।
आपाते पक्षिसंघानां पक्षिराज इव व्रजन् ॥ ८०
हनुमान्मेघजालानि प्रकर्षन् मारुतो यथा ।
पांडुरारुणवर्णानि नीलमांजिष्ठकानिच ॥ ८१

कपिनाकृष्यमाणानि महाभ्राणिचकाशिरे ।
प्रविशन्नभ्रजालानि निष्पतंश्च पुनःपुनः ॥ ८२
प्रच्छन्नश्च प्रकाशश्च चंद्रमा इव लक्ष्यते ।
प्लवमानं तु तं दृष्ट्वा प्लवगं त्वरितं तदा ॥ ८३
ववर्षुः पुष्पवर्षाणि देवगंधर्वदानवाः ।
तताप न हि तं सूर्यः प्लवंतं वानरोत्तमम् ॥ ८४
सिषेवे च तदा वायू रामकार्यार्थसिद्धये ।
ऋषय स्तुष्टुवुश्चैनं प्लवमानं विहायसा ॥ ८५
जगुश्च देवगंधर्वाः प्रशंसंतो महौजसम् ।
नागाश्च तुष्टुवु र्यक्षा रक्षांसि विबुधाः खगाः ॥ ८६
प्रेक्ष्य सर्वे कपिवरं सहसा विगतक्लमम् ।
तस्मिन् प्लवगशार्दूले प्लवमाने हनूमति ॥ ८७
इक्ष्वाकुकुलमानार्थी चिंतयामास सागरः ।
साहाय्यं वानरेंद्रस्य यदि नाहं हनूमतः ॥ ८८
करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ।
अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः ॥ ८९
इक्ष्वाकुसचिवश्चायं नावसीदितु मर्हति ।
तथा मया विधातव्यं विश्रमेत यथा कपिः ॥ ९०
शेषंच मयि विश्रांत स्सुखेनातिपतिष्यति ।
इति कृत्वा मतिं साध्वीं समुद्र श्छन्न मंभसि ॥ ९१
हिरण्यनाभं मैनाक मुवाच गिरिसत्तमम् ।
त्व मिहासुरसंघानां पातालतलवासिनाम् ॥ ९२

देवराज्ञा गिरिश्रेष्ठ परिघ स्सन्निवेशितः ।
स्व मेषां जातवीर्याणां पुन रेवोत्पातिष्यताम् ॥ ९३
पाताळस्याप्रमेयस्य द्वार मावृत्य तिष्ठसि ।
तिर्य गूर्ध्व मधश्चैव शक्ति स्ते शैल वर्धितुम् ॥ ९४
तस्मा त्संचोदयामि त्वा मुत्तिष्ठ गिरिसत्तम ।
स एषकपिशार्दूल स्त्वा मुपर्येति वीर्यवान् ॥ ९५
हनूमान् रामकार्यार्थं भीमकर्मा खमाप्लुतः ।
अस्य साह्यं मया कार्य मिक्ष्वाकुकुलवर्तिनः ॥ ९६
मम हीक्ष्वाकवः पूज्याः परं पूज्यतमास्तव ।
कुरु साचिव्य मस्माकं न नः कार्य मतिक्रमेत् ॥ ९७
कर्तव्य मकृतं कार्यं सतां मन्यु मुदीरयेत् ।
सलिला दूर्ध्व मुत्तिष्ठ तिष्टत्वेष कपि स्त्वयि ॥ ९८
अस्माक मतिथि श्चैव पूज्यश्च प्लवतां वरः ।
चामीकरमहानाभ देवगंधर्वसेवित ॥ ९९
हनुमां स्त्वयि विश्रांत स्तत श्शेषं गमिष्यति ।
स एष कपिशार्दूल स्त्वा मुपर्येति वीर्यवान् ॥ १००
काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम् ।
श्रमंच प्लवगेंद्रस्य समीक्ष्योत्थातु मर्हसि ॥ १०१
हिरण्यनाभो मैनाको निशम्य लवणांभसः ।
उत्पपात जला त्तूर्णं महाद्रुमलतायुतः ॥ १०२
स सागरजलं भित्वा बभूवाभ्युत्थित स्तदा ।
यथा जलधरं भित्वा दीप्तरश्मि र्दिवाकरः ॥ १०३

स महात्मा मुहूर्तेन सर्वत स्सलिलावृतः ।
दर्शयामास शृंगाणि सागरेण नियोजितः ॥ १०४
शातकुंभमयै श्शृंगै स्सकिन्नरमहोरगैः ।
आदित्योदयसंकाशै रालिखद्भि रिवांबरम् ॥ १०५
तप्तजांबूनदै श्शृंगैः पर्वतस्य समुत्थितैः ।
आकाशं शस्त्रसंकाश मभव त्काञ्चनप्रभम् ॥ १०६
जातरूपमयै श्शृङ्गै भ्राजमानै स्स्वयंप्रभैः ।
आदित्यशतसंकाश स्सोऽभव द्गिरिसत्तमः ॥ १०७
तमुत्थित मसंगेन हनुमा नग्रत स्स्थितम् ।
मध्ये लवणतोयस्य विघ्नोऽय मिति निश्चितः ॥ १०८
स त मुच्छ्रित मत्यर्थं महावेगो महाकपिः ।
उरसा पातयामास जीमूत मिव मारुतः ॥ १०९
स तथा पातित स्तेन कपिना पर्वतोत्तमः ।
बुद्ध्वा तस्य कपे र्वेगं जहर्ष च ननाद च ॥ ११०
त माकाशगतं वीर माकाशे समुपस्थितः ।
प्रीतो हृष्टमना वाक्य मब्रवी त्पर्वतः कपिम् ॥ १११
मानुषं धारयन् रूप मात्म नश्शिखरे स्थितः ।
दुष्करं कृतवा न्कर्म त्व मिदं वानरोत्तम ॥ ११२
निपत्य मम शृंगेषु विश्रमस्व यथासुखम् ।
राघवस्य कुले जातै रुदधिः परिवर्धितः ॥ ११३
स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ।
कृते च प्रतिकर्तव्य मेष धर्म स्सनातनः ॥ ११४

सोऽयं त्वत्प्रतिकारार्थी त्वत्त स्सम्मान मर्हति ।
त्वन्निमित्त मनेनाहं बहुमाना त्प्रचोदितः ॥ ११५
तिष्ठ त्वं कपिशार्दूल मयि विश्रम्य गम्यताम् ।
योजनानां शतं चापि कपिरेष श्रमाप्लुतः ॥ ११६
तव सानुषु विश्रांत श्शेषं प्रक्रमता मिति ।
तदिदं गंधव त्स्वादु कंदमूलफलं बहु ॥ ११७
तदास्वाद्य हरिश्रेष्ठ विश्रांतोऽनुगमिष्यसि ।
अस्माक मपि संबंधः कपिमुख्य त्वयाऽस्तिवै ॥ ११८
प्रख्यात स्त्रिषु लोकेषु महागुणपरिग्रहः ।
वेगवंतः प्लवंतो ये प्लवंगा मारुतात्मज ॥ ११९
तेषां मुख्यतमं मन्ये त्वा मह कपिकुञ्जर ।
अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता ॥ १२०
धर्मं जिज्ञासमानेन किं पुन स्त्वादृशो महान् ।
त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ॥ १२१
पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर ।
पूजिते त्वयि धर्मज्ञ पूजां प्राप्नोति मारुतः ॥ १२२
तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम् ।
पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् ॥ १२३
तेहि जग्मुर्दिश स्सर्वा गरुडानिलवेगिनः ।
ततस्तेषु प्रयातेषु देवसंघा स्सहर्षिभिः ॥ १२४
भूतानि च भयं जग्मु स्तेषां पतनशंकया ।
ततः क्रुद्ध स्सहस्राक्षः पर्वतानां शतक्रतुः ॥ १२५

पक्षांश्चिच्छेद वज्रेण तत्र तत्र सहस्रशः ।
स मामुपागतः क्रुद्धो वज्रमुद्यम्य देवराट् ॥ १२६
ततोऽहं सहसा क्षिप्तश्श्वसनेन महात्मना ।
अस्मिन्लवणतोयेच प्रक्षिप्तः प्लवगोत्तम ॥ १२७
गुप्तपक्षसमग्रश्च तव पित्राऽभिरक्षितः ।
ततोऽहंमानयामित्वां मान्योहि मम मारुतः ॥ १२८
त्वया मे ह्येष संबंधः कपिमुख्य महागुणः ।
अस्मिन्नेवं गते कार्ये सागरस्य ममैव च ॥ १२९
प्रीतिं प्रीतमनाः कर्तुं त्व मर्हसि महाकपे ।
श्रमं मोक्षय पूजां च गृहाण कपिसत्तम ॥ १३०
प्रीतिंच बहुमन्यस्व प्रीतोऽस्मि तव दर्शनात् ।
एव मुक्तः कपिश्रेष्ठ स्तं नगोत्तम मब्रवीत् ॥ १३१
प्रीतोऽस्मि कृत मातिथ्यं मन्युरेषोऽपनीयताम् ।
त्वरते कार्यकालो मे अह श्चाप्यतिवर्तते ॥ १३२
प्रतिज्ञा च मया दत्ता न स्थातव्य मिहांतरे ।
इत्युक्त्वा पाणिना शैल मालभ्य हरिपुंगवः ॥ १३३
जगामाकाश माविश्य वीर्यवान् प्रहसन्निव ।
स पर्वतसमुद्राभ्यां बहुमाना दवेक्षितः ॥ १३४
पूजित श्चोपपन्नाभि राशीर्भि रनिलात्मजः ।
अथोर्ध्वं दूर मुत्प्लुत्य हित्वाशैलमहार्णवौ ॥ १३५
पितुः पंथान मास्थाय जगाम विमलांबरे ।
भूयश्चोर्ध्वं गतिं प्राप्य गिरिं त मवलोकयन् ॥ १३६

वायुसूनु र्निरालंबे जगाम विमलेऽम्बरे ।
तद्द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ॥ १३७
प्रशशंसु स्सुरा स्सर्वे सिद्धाश्च परमर्षयः ।
देवताश्चाभवन् हृष्टा स्तत्रस्था स्तस्य कर्मणा ॥ १३८
कांचनस्य सुनाभस्य सहस्राक्ष श्च वासवः ।
उवाच वचनं धीमान् परितोषा त्सगद्गदम् ॥ १३९
सुनाभं पर्वतश्रेष्ठं स्वयमेव शचीपतिः ।
हिरण्यनाभ शैलेंद्र परितुष्टोऽस्मि ते भृशम् ॥ १४०
अभयं ते प्रयच्छामि तिष्ठ सौम्य यथासुखम् ।
साह्यं कृतं ते सुमह द्विक्रांतस्य हनूमतः ॥ १४१
क्रमतो योजनशतं निर्भयस्य भये सति ।
रामस्यैव हि दूत्येन याति दाशरथे र्हरिः ॥ १४२
सत्क्रियां कुर्वता तस्य तोषितोऽस्मि दृढं त्वया ।
ततः प्रहर्ष मगम द्विपुलं पर्वतोत्तमः ॥ १४३
देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम् ।
स वै दत्तवर श्शैलो बभूवावस्थित स्तदा ॥ १४४
हनुमां श्च मुहूर्तेन व्यतिचक्राम सागरम् ।
ततो देवा स्सगन्धर्वा स्सिद्धा श्च परमर्षयः ॥ १४५
[तं प्रयान्तं समुद्वीक्ष्य ह्याकाशे मारुतात्मजम्.]
अब्रुव न्सूर्यसन्काशां सुरसां नागमातरम् ।
अयं वातात्मज श्श्रीमा न्प्लवते सागरोपरि ॥ १४६

हनुमान्नामतस्य त्वं मुहूर्तं विघ्न माचर ।
राक्षसं रूप मास्थाय सुघोरं पर्वतोपमम् ॥ १४७
दंष्ट्राकरालं पिङ्गाक्षं वक्त्रङ्कृत्वा नभस्समम् ।
बल मिच्छामहे ज्ञातुं भूय श्चास्य पराक्रमम् ॥ १४८
त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ।
एव मुक्ता तु सा देवी दैवतै रभिसत्कृता ॥ १४९
समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ।
विकृतंच विरूपञ्च सर्वस्यच भयावहम् ॥ १५०
प्लवमानं हनूमन्त मावृत्येद मुवाचह ।
मम भक्षः प्रदिष्टस्त्व मीश्वरै र्वानरर्षभ ॥ १५१
अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् ।
एवमुक्त स्सुरसया प्रांजलि र्वानरर्षभः ॥ १५२
प्रहृष्टवदन श्श्रीमा निदं वचन मब्रवीत् ।
रामो दाशरथि र्नाम प्रविष्टो दण्डकावनम् ॥ १५३
लक्ष्मणेन सह भ्राता वैदेह्याचापि भार्यया ।
अन्यकार्यविषक्तस्य बद्धवैरस्य राक्षसैः ॥ १५४
तस्यो सीता हृता भार्या रावणेन यशस्विनी ।
तस्या स्सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥ १५५
कर्तुं मर्हसि रामस्य साह्यं विषयवासिनि ।
अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्ट कारिणम् ॥ १५६
आगमिष्यामि ते वक्त्रं सत्यं प्रतिश्रृणोमिते ।
एव मुक्ता हनुमता सुरसा कामरूपिणी ॥ १५७

अब्रवी न्नातिवर्ते न्मां कश्चि देष वरो मम ।
तं प्रयांतं समुद्वीक्ष्य सुरसा वाक्य मब्रवीत् ।
बलं जिज्ञासमानावै नागमाता हनूमतः ॥
प्रविश्य वदनं मेऽद्य गंतव्यं वानरोत्तम ।
वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥
व्यादाय विपुलं वक्त्रं स्थिता सा मारुतेः पुरः
एव मुक्त स्सुरसया क्रुद्धो वानरपुंगवः ॥
अब्रवी त्कुरु वै वक्त्रं येन मां विषहिष्यसे ।
इत्युक्त्वा सुरसां क्रुद्धां दशयोजनमायतां ॥
दशयोजनविस्तारो बभूव हनुमां स्तदा ।
तं दृष्ट्वा मेघसंकाशं दशयोजन मायतम् ॥
चकार सुरसा चास्यं विंशद्योजन मायतम् ।
हनुमां स्तु ततः क्रुद्ध स्त्रिंशद्योजन मायतः ॥
चकार सुरसा वक्त्रं चत्वारिंश त्तदोच्छ्रितम् ।
बभूव हनुमा न्वीरः पञ्चाशद्योजनोच्छ्रितः ॥
चकार सुरसा वक्त्रं षष्टियोजन मायतम् ।
तथैव हनुमा न्वीर स्सप्तती योजनोच्छ्रितः ॥
चकार सुरसा वक्त्र मशीतीयोजनायतम् ।
हनुमा नचलप्रख्यो नवतीयोजनोच्छ्रितः ॥
[चकार सुरसा वक्त्रं शतयोजन मायतम् ।]
तद्दृष्ट्वा व्यादितं त्वास्यं वायुपुत्र स्सुबुद्धिमान् ॥ १५८

दीर्घजिह्वां सुरसया सुघोरं नरकोपमम् ।
सुसंक्षिप्यात्मनः कायं बभूवांगुष्ठमात्रकः ॥ १५९
सोऽभिपत्याशु तद्वक्रं निष्पत्यच महाबलः ।
अंतरिक्षे स्थित श्श्रीमा निदं वचन मब्रवीत् ॥ १६०
प्रविष्टोऽस्मि हि ते वक्रं दाक्षायणि नमोऽस्तुते ।
गमिष्ये यत्र वैदेही सत्यश्चासी द्वर्स्तव ॥ १६१
तं दृष्ट्वा वदना न्मुक्तं चंद्रं राहुमुखादिव ।
अब्रवी त्सुरसा देवी स्वेन रूपेण वानरम् ॥ १६२
अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।
समानयस्व वैदेहीं राघवेण महात्मना ॥ १६३
तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
साधुसाध्विति भूतानि प्रशशंसु स्तदा हरिम् ॥ १६४
ससागर मनाधृष्य मभ्येत्य वरुणालयम् ।
जगामाकाश माविश्य वेगेन गरुडोपमः ॥ १६५
सेविते वारिधाराभिः पतगै श्च निषेविते ।
चरिते कैशिकाचार्यै रैरावतनिषेविते ॥ १६६
सिंहकुंजरशार्दूलपतगोरगवाहनैः ।
विमानै स्संपतद्भि श्च विमलै स्समलंकृते ॥ १६७
वज्राशनिसमाघातैः पावकै रुपशोभिते ।
कृतपुण्यै र्महाभागै स्स्वर्गजिद्भि रलंकृते ॥ १६८
वहता हव्य मत्यर्थं सेविते चित्रभानुना ।
ग्रहनक्षत्रचंद्रार्कतारागणविभूषिते ॥ १६९

महर्षिगण गंधर्व नागयक्षसमाकुले ।
विविक्ते विमले विश्वे विश्वावसुनिषेविते ॥ १७०
देवराजगजाक्रांते चंद्रसूर्यपथेशिवे ।
विताने जीवलोकस्य वितते ब्रह्मनिर्मिते ॥ १७१
बहुश स्सेविते वीरै र्विद्याधरगणै र्वरैः ।
जगाम वायुमार्गे तु गरुत्मानिव मारुतिः ॥ १७२
[हनुमान्मेघजालानि प्रकर्ष न्मारुतो यथा ।
कालागरुसवर्णानि रक्तपीतसितानिच ॥
कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ।
प्रविश न्नभ्रजालानि निष्पतं श्च पुनः पुनः ॥
प्रावृषीन्दुरि वाभाति निष्पतन्प्रविशं स्तदा ।]
प्रदृश्यमान स्सर्वत्र हनुमा न्मारुतात्मजः ।
भेजेऽम्बरं निरालंबं लंबपक्ष इवाद्रिराट् ॥ १७३
प्लवमानंतु तं दृष्ट्वा सिंहिका नाम राक्षसी ।
मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥ १७४
अद्य दीर्घस्य कालस्य भविष्याम्यह माशिता ।
इदं हि मे महत्सत्वं चिरस्य वश मागतम् ॥ १७५
इति संचिंत्य मनसा छाया मस्य समाक्षिपत् ।
छायायां गृह्यमाणायां चिन्तयामास वानरः ॥ १७६
समाक्षिप्तोऽस्मि सहसा पंगूकृतपराक्रमः ।
प्रतिलोमेन वातेन महानौ रिव सागरे ॥ १७७

तिर्यगूर्ध्व मधश्चैव वीक्षमाण स्ततः कपिः ।
ददर्श समहत्सत्त्व मुत्थितं लवणाम्भसि ॥ १७८
तद्दृष्ट्वा चिन्तयामास मारुति र्विकृताननम् ।
कपिराजेन कथितं(सत्य)सत्त्व मद्भुतदर्शनम् ॥ १७९
छायाग्राहि महावीर्यं तदिदं नात्रसंशयः ।
सतां बुद्ध्वाऽर्थतत्त्वेन सिंहिकां मतिमान्कपिः ॥ १८०
व्यवर्धत महाकायः प्रावृषीव वलाहकः ।
तस्य सा काय मुद्वीक्ष्य वर्धमानं महाकपेः ॥ १८१
वक्त्रं प्रसारयामास पाताळांतरसन्निभम् ।
घनराजीव गर्जंती वानरं समभिद्रवत् ॥ १८२
स ददर्श ततस्तस्या विवृतं सुमह न्मुखम् ।
कायमात्रं च मेधावी मर्माणि च महाकपिः ॥ १८३
सतस्या विवृते वक्त्रे वज्रसंहननः कपिः ।
संक्षिप्य मुहु रात्मानं निष्पपात महाबलः ॥ १८४
आस्ये तस्या निमज्जंतं ददृशु स्सिद्धचारणाः ।
ग्रस्यमानं यथा चंद्रं पूर्णं पर्वणि राहुणा ॥ १८५
ततस्तस्या नखै स्तीक्ष्णै मर्माण्युत्कृत्य वानरः ।
उत्पपाताथ वेगेन मनस्संपातविक्रमः ॥ १८६
तां तु (दृष्ट्वा) च धृत्या च दाक्षिण्येन निपात्य च । दिष्ट्या
स कपिप्रवरो वेगा द्ववृधे पुन रात्मवान् ॥ १८७
हृतहृत्सा हनुमता पपात विधुराऽम्भसि ।
[स्वयंभुवैव हनुमान् सृष्टस्तस्या निपातने ॥]

तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् ॥ १८८
भूतान्याकाशचारीणि त मूचुः प्लवगोत्तमम् ।
भीम मद्य कृतं कर्म महत्सत्त्वं त्वया हतम् ॥ १८९
साधयार्थ मभिप्रेत मरिष्टं प्लवतां वर ।
यस्य त्वेतानि चत्वारि वानरेंद्र यथा तव ॥ १९०
धृति र्दृष्टि र्मति र्दाक्ष्यं सकर्मसु न सीदति ।
स तै स्सम्भावितः पूज्यः प्रतिपन्नप्रयोजनः ॥ १९१
जगामाकाश माविश्य पन्नगाशनवत्कपिः ।
प्राप्तभूयिष्ठपार स्तु सर्वतः प्रतिलोकयन् ॥ १९२
योजनानां शतस्यांते वनराजिं ददर्श सः ।
ददर्श च पतन्नेव विविधद्रुमभूषितम् ॥ १९३
द्वीपं शाखामृगश्रेष्ठो मलयोपवनानिच ।
सागरं सागरानूपं सागरानूपजा न्द्रुमान् ॥ १९४
सागरस्य च पत्नीनां मुखान्यपि विलोकयन् ।
समहामेघसंकाशं समीक्ष्यात्मान मात्मवान् ॥ १९५
निरुंधंतामि वाकाशं चकार मतिमा न्मतिम् ।
कायवृद्धिं प्रवेगञ्च मम दृष्ट्वैव राक्षसाः ॥ १९६
मयि कौतूहलं कुर्यु रिति मेने महाकपिः ।
तत श्शरीरं संक्षिप्य तन्महीधर सन्निभम् ॥ १९७
पुनः प्रकृति मापेदे वीतमोह इवात्मवान् ।
तद्रूप मतिसंक्षिप्य हनूमा न्प्रकृतौ स्थितः ॥ १९८
त्रीन्क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ।

स चारुनानाविधरूपधारी परं समासाद्य समुद्रतीरम् ।
परै रशक्यः प्रतिपन्नरूप स्समीक्षितात्मा समवेक्षितार्थः ॥ १९९
तत स्स लंबस्य गिरे स्समृद्धे विचित्रकूटे निपपात कूटे ।
सकेतकोद्दालकनाळिकेरे महाद्रिकूटप्रतिमो महात्मा ॥ २००
तत स्तु संप्राप्य समुद्रतीरं समीक्ष्य लंकां गिरिवर्यमूर्ध्नि ।
कपि स्तु तस्मि न्निपपात पर्वते विधूय रूपं व्यथय न्मृगद्विजान् ॥
ससागरं दानवपन्नगायुतं बलेन विक्रम्य महोर्मिमालिनम् ।
निपत्य तीरे च महोदधे स्तदा ददर्श लंका ममरावती मिव ॥ २०२

इति श्रीमत्सुन्दरकाण्डे प्रथमस्सर्गः ॥

## ॥ द्वितीयस्सर्गः ॥

ससागर मनाधृष्य मतिक्रम्य महाबलः ।
त्रिकूटशिखरे लंकां स्थितां स्वस्थो ददर्शह ॥ १
ततः पादपमुक्तेन पुष्पवर्षेण वीर्यवान् ।
अभिवृष्ट स्स्थित स्तत्र बभौ पुष्पमयो यथा ॥ २
योजनानां शतं श्रीमां स्तीर्त्वाऽप्युत्तमविक्रमः ।
अनिश्श्वसन् कपि स्तत्र न ग्लानि मधिगच्छति ॥ ३
शता न्यहं योजनानां क्रमेयं सुबहून्यपि ।
किंपुन स्सागरस्यांतं संख्यातं शतयोजनम् ॥ ४
स तु वीर्यवतां श्रेष्ठः प्लवता मपि चोत्तमः ।
जगाम वेगवान् लंकां लंघयित्वा महोदधिम् ॥ ५

शाद्वलानि च नीलानि गंधवंति वनानि च ।
मधुमं गंडवंति च मध्येन जगाम नगवंति च ॥ ६
शैलांश्च तरुसंछन्नान् वनराजी श्च पुष्पिताः ।
अधिचक्राम तेजस्वी हनुमान् प्लवगर्षभः ॥ ७
स तस्मि न्नचले तिष्ठन् वना न्युपवनानि च ।
सनगाग्रेच तां लंकां ददर्श पवनात्मजः ॥ ८
सरला न्कर्णिकारां श्च खर्जूरां श्च सुपुष्पितान् ।
प्रियाळू न्मुचुळिंदां श्च कुटजा न्केतकानपि ॥ ९
प्रियंगू न्गंधपूर्णांश्च नीपा न्सप्तच्छदां स्तथा ।
असना न्कोविदारां श्च करवीरां श्च पुष्पितान् ॥ १०
पुष्पभारनिबद्धां श्च तथा मुकुळिता नपि ।
पादपान्विहगाकीर्णा न्पवनाधूतमस्तकान् ॥ ११
हंसकारण्डवाकीर्णा वापीः पद्मोत्पलायुताः ।
आक्रीडा न्विविधान्रम्या न्विविधां श्च जलाशयान् ॥ १२
संतता न्विविधैर्वृक्षै स्सर्वर्तुफलपुष्पितैः ।
उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः ॥ १३
समासाद्य च लक्ष्मीवा न्लंकां रावणपालिताम् ।
परिखाभि स्सपद्माभि स्सोत्पलाभि रलंकृताम् ॥ १४
सीतापहरणार्थेन रावणेन सुरक्षिताम् ।
समंता द्विचरद्भिश्च राक्षसै रुग्रधन्विभिः ॥ १५
काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम् ।
गृहैश्च ग्रहसंकाशै श्शारदाम्बुदसन्निभैः ॥ १६
गिरि

च्या
पांडुराभिः प्रतोळीभिः [illegible]भि रभिसंवृताम् ।
अट्टालकशताकीर्णां पताकाध्वजमालिनीम् ॥ १७
तोरणैः काञ्चनै र्दिव्यै र्लतापङ्क्तिविचित्रितैः ।
ददर्श हनुमान्लंकां दिवि देवपुरीं यथा ॥ १८
गिरिमूर्ध्नि स्थितां लंकां पांडुरैर्भवनैश्शुभैः ।
ददर्श स कपिश्रेष्ठः पुर माकाशगं यथा ॥ १९
पालितां राक्षसेंद्रेण निर्मितां विश्वकर्मणा ।
प्लवमाना मिवाकाशे ददर्श हनुमान्पुरीम् ॥ २०
वप्रप्राकारजघनां विपुलाम्बुनवाम्बराम् ।
शतघ्नी शूलकेशांता मट्टालकवतंसकाम् ॥ २१
मनसेव कृतां लंकां निर्मितां विश्वकर्मणा ।
द्वार मुत्तर मासाद्य चिन्तयामास वानरः ॥ २२
~~कैलास शिखरप्रख्या मालिखन्ती मिवांबरम्~~ ।
~~द्वार मुत्तर मासाद्य चिन्तयामास वानरः~~ ॥ २३
कैलास शिखरप्रख्या मालिखंती मिवांबरम् ।
डीयमाना मिवाकाश मुच्छ्रितै र्भवनोत्तमैः ॥ २४
संपूर्णां राक्षसैर्घोरैर्नागै र्भोगवती मिव ।
अचिन्त्यां सुकृतां स्पष्टां कुबेराध्युषितां पुरा ॥ २५
दंष्ट्रिभि र्बहुभि श्शूरै श्शूलपट्टसपाणिभिः ।
रक्षितां राक्षसै र्घोरै र्गुहा माशीविषै रिव ॥ २६
तस्याश्च महतीं गुप्तिं सागरं च निरीक्ष्यसः ।
रावणं च रिपुं घोरं चिन्तयामास वानरः ॥ २७

आगत्यापीह हरयोभविष्यंति निरर्थकाः ।
नहि युद्धेन वैलंका शक्या जेतुं सुरैरपि ॥ २८
इमांतु विषमां दुर्गां लंकां रावणपालिताम् ।
प्राप्यापि स महाबाहुः किंकरिष्यति राघवः ॥ २९
अवकाशो न सांत्वस्यराक्षसे ष्वभिगम्यते ।
नदानस्य नभेदस्यनैव युद्धस्यदृश्यते ॥ ३०
चतुर्णामेवहिगति र्वानराणां महात्मनाम् ।
वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ॥ ३१
यावज्जानामि वैदेहीं यदि जीवतिवा नवा ।
तत्रैव चिंतयिष्यामि दृष्ट्वा तां जनकात्मजाम् ॥ ३२
ततस्सचिंतयामास मुहूर्तं कपिकुञ्जरः ।
गिरिशृंगे स्थित स्तस्मिन् रामस्याभ्युदये रतः ॥ ३३
अनेन रूपेण मया नशक्या रक्षसां पुरी ।
प्रवेष्टुं राक्षसैर्गुप्ताक्रूरैर्बलसमन्वितैः ॥ ३४
उग्रौजसो महावीर्या बलवंतश्च राक्षसाः ।
वंचनीया मया सर्वे जानकीं परिमार्गता ॥ ३५
लक्ष्यालक्ष्येण रूपेण रात्रौ लंकापुरी मया ।
प्रवेष्टुं प्राप्तकालं मे कृत्यं साधयितुं महत् ॥ ३६
तां पुरीं तादृशीं दृष्ट्वा दुराधर्षां सुरासुरैः ।
हनुमान् चिंतयामास विनिश्चित्य मुहुर्मुहुः ॥ ३७
केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् ।
अदृष्टो राक्षसेंद्रेण रावणेन दुरात्मना ॥ ३८

नविनश्येत्कथं कार्यं रामस्य विदितात्मनः ।
एकामेकश्चपश्येयं रहिते जनकात्मजाम् ॥ ३९
भूताश्चार्थाविपद्यंते देशकालविरोधिताः ।
विक्लबं दूत मासाद्य तम स्सूर्योदये यथा ॥ ४०
अर्थानर्थांतरे बुद्धि र्निश्चिताऽपि न शोभते ।
घातयंति हि कार्याणि दूताः पंडितमानिनः ॥ ४१
न विनश्ये त्कथं कार्यं वैक्लब्यं न कथं भवेत् ।
लंघनं च समुद्रस्य कथं नु न वृथा भवेत् ॥ ४२
मयि दृष्टे तु रक्षोभी रामस्य विदितात्मनः ।
भवे द्व्यर्थ मिदं कार्यं रावणानर्थ मिच्छतः ॥ ४३
न हि शक्यं क्वचि त्स्थातु मविज्ञातेन राक्षसैः ।
अपि राक्षसरूपेण किमुतान्येन केनचित् ॥ ४४
वायुरप्यत्र नज्ञात श्चरे दिति मति र्मम ।
नह्य स्त्यविदितं किञ्चि द्राक्षसानां बलीयसाम् ॥ ४५
इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः ।
विनाश मुपयास्यामि भर्तु रर्थश्च हीयते ॥ ४६
तदहं स्वेनरूपेण रजन्यां ह्रस्वतां गतः ।
लंका मभिपतिष्यामि राघवस्यार्थसिद्धये ॥ ४७
रावणस्य पुरीं रात्रौ प्रविश्य सुदुरासदाम् ।
विचिन्व न्भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥ ४८
इति संचित्य हनुमान् सूर्यस्यास्तमयं कपिः ।
आचकांक्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ॥ ४९

सूर्ये चास्तंगते रात्रौ देहं संक्षिप्य मारुतिः ।
पृषदंशकमात्रस्सन् बभूवाद्भुतदर्शनः ॥ ५०
प्रदोषकाले हनुमां स्तूर्ण मुत्प्लुत्य वीर्यवान् ।
प्रविवेश पुरीं रम्यां सुविभक्तमहापथाम् ॥ ५१
प्रासादमालावितता स्तंभैः कांचनराजतैः ।
शातकुंभमयै र्जालै र्गंधर्वनगरोपमाम् ॥ ५२
सप्तभौमाष्टभौमैश्च स ददर्श महापुरीम् ।
तलै स्स्फटिक संकीर्णैः कार्तस्वरविभूषितैः ॥ ५३
वैडूर्यमणिचित्रैश्च मुक्ताजालविभूषितैः ।
तलै श्शुशुभिरे तानि भवनान्यत्र रक्षसाम् ॥ ५४
कांचनानि च चित्राणि तोरणानि च रक्षसाम् ।
लंका मुद्योतयामासु स्सर्वत स्समलंकृताम् ॥ ५५
अचिंत्या मद्भुताकारां दृष्ट्वा लंकां महाकपिः ।
आसी द्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ॥ ५६
स पांडुरोद्विद्धविमानमालिनीं महार्हजांबूनदजालतोरणाम् ।
यशस्विनीं रावणबाहुपालितां क्षपाचरै र्भीमबलै स्समावृताम् ॥ ५७
चंद्रोऽपि साचिव्य मिवास्य कुर्वन्तारागणै र्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन वितत्य लोक मुत्तिष्ठते नैकसहस्ररश्मिः ॥ ५८
शंखप्रभं क्षीरमृणालवर्ण मुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स हरिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥ ५९

इति श्रीमत्सुन्दरकाण्डे द्वितीयस्सर्गः

## ॥ तृतीयस्सर्गः ॥

स लंबशिखरे लंबे लंबतोयदसन्निभे ।
सत्त्व मास्थाय मेधावी हनूमा न्मारुतात्मजः ॥ १
निशि लंकां महासत्वो विवेश कपिकुञ्जरः ।
रम्यकाननतोयाढ्यां पुरीं रावणपालिताम् ॥ २
शारदाम्बुधरप्रख्यै र्भवनै रुपशोभिताम् ।
सागरोपमनिर्घोषां सागरानिलसेविताम् ॥ ३
सुपुष्टबलसंघुष्टां यथैव विटपावतीम् ।
चारुतोरणनिर्यूहां पांडुरद्वारतोरणाम् ॥ ४
भुजगाचरितां गुप्तां शुभां भोगवती मिव ।
तां स विद्युद्घनाकीर्णां ज्योतिर्मार्गे निषेविताम् ॥ ५
मंदमारुतसंचारां यथेंद्रस्यामरावतीम् ।
शातकुंभेन महता प्राकारेणाभिसंवृताम् ॥ ६
किंकिणीजालघोषाभिः पताकाभि रलंकृताम् ।
आसाद्य सहसा हृष्टः प्राकार मभिपेदिवान् ॥ ७
विस्मयाविष्टहृदयः पुरी मालोक्य सर्वतः ।
जांबूनदमयै र्द्वारैर्वैडूर्यकृतवेदिकैः ॥ ८
वज्र स्फटिकमुक्ताभि र्मणिकुट्टिमभूषितैः ।
तप्तहाटकनिर्यूहै राजतामलपांडुरैः ॥ ९
वैडूर्यकृतसोपानै स्स्फाटिकांतरपांसुभिः ।
चारुसंजवनोपेतैः खमिवोत्पतितै श्शुभैः ॥ १०

क्रौंचबर्हिणसंघुष्टै राजहंसनिषेवितैः ।
तूर्याभरणनिर्घोषै स्सर्वतः प्रतिनादिताम् ॥ ११
वस्वौकसाराप्रतिमां तां वीक्ष्य नगरीं ततः ।
खमिवोत्पतितुं कांक्षी जहर्ष हनुमान् कपिः ॥ १२
तां समीक्ष्य पुरीं रम्यां राक्षसाधिपते श्शुभाम् ।
अनुत्तमामृद्धियुतां चिंतयामास वीर्यवान् ॥ १३
नेय मन्येन नगरी शक्या धर्षयितुं बलात् ।
रक्षिता रावणबलै रुद्यतायुधधारिभिः ॥ १४
कुमुदाङ्गदयो र्वापि सुषेणस्य महाकपेः ।
प्रसिद्धेयं भवे द्भूमि मैन्दद्विविदयो रपि ॥ १५
विवस्वत स्तनूजस्य हरेश्च कुशपर्वणः ।
ऋक्षस्य केतुमालस्य ममचैव गति र्भवेत् ॥ १६
समीक्ष्यतु महाबाहू राघवस्य पराक्रमम् ।
लक्ष्मणस्य च विक्रान्त मभव त्प्रीतिमा न्कपिः ॥ १७
तां रत्नवसनोपेतां कोष्ठागारावतंसकाम् ।
यन्त्रागारस्तनी मृद्धां प्रमदा मिव भूषिताम् ॥ १८
तां नष्टतिमरां दीपै र्भास्वरै श्च महागृहैः ।
नगरीं राक्षसेन्द्रस्य स ददर्शमहाकपिः ॥ १९
अथ सा हरिशार्दूलं प्रविशन्तं महाबलम् ।
नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥ २०
सा तं हरिवरं दृष्ट्वा लंका रावणपालिता ।
स्वय मेवोत्थिता तत्र विकृताननदर्शना ॥ २१

पुरस्तात्कपिवर्यस्य वायुसूनो रतिष्ठत ।
मुञ्चमाना महानाद मब्रवी त्पवनात्मजम् ॥ २२
कस्त्वं केन च कार्येण इह प्राप्तो वनालय ।
कथयस्वेह यत्तत्त्वं यावत्प्राणा धरन्ति ते ॥ २३
न शक्यं खल्वियं लंका प्रवेष्टुं वानर त्वया ।
रक्षिता रावणबलै रभिगुप्ता समन्ततः ॥ २४
अथ ता मब्रवीद्वीरो हनुमा नग्रतस्स्थिताम् ।
कथयिष्यामि ते तत्त्वं य न्मां त्वं परिपृच्छसि ॥ २५
का त्वं विरूपनयना पुरद्वारेऽवतिष्ठसि ।
कि मर्थं चापि मां रुद्ध्वा निर्भर्त्सयसि दारुणा ? ॥ २६
हनुमद्वचनं श्रुत्वा लंका सा कामरूपिणी ।
उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ॥ २७
अहं राक्षसराजस्य रावणस्य महात्मनः ।
आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरी मिमाम् ॥ २८
न शक्या मा मवज्ञाय प्रवेष्टुं नगरी त्वया ।
अद्य प्राणैः परित्यक्तः स्वप्स्यसे निहतो मया ॥ २९
अहं हि नगरी लंका स्वयमेव प्लवङ्गम ।
सर्वतः परिरक्षामि ह्येत त्ते कथितं मया ॥ ३०
लंकाया वचनं श्रुत्वा हनुमा न्मारुतात्मजः ।
यत्नवान् स हरिश्रेष्ठः स्थितश्शैलइवा परः ॥ ३१
सतां स्त्रीरूपविकृतां दृष्ट्वा वानरपुंगवः ।
आबभाषेऽथ मेधावी सत्त्ववान् प्लवगर्षभः ॥ ३२

द्रक्ष्यामि नगरीं लंकां साट्टप्राकारतोरणाम् ।
[निर्विशङ्क मिमं लोकं पश्यन्त्या स्तव सां प्रतम् ।]
इत्यर्थ मिह संप्राप्तः परं कौतूहलं हि मे ॥ ३३
वना न्युपवनानीह लंकायाः काननानि च ।
सर्वतो गृहमुख्यानि द्रष्टु मागमनं हि मे ॥ ३४
तस्य तद्वचनं श्रुत्वा लंका सा कामरूपिणी ।
भूय एव पुन र्वाक्यं बभाषे परुषाक्षरम् ॥ ३५
मा मनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालिताम् ।
न शक्य मद्य ते द्रष्टुं पुरीयं वानराधम ॥ ३६
तत स्स कपिशार्दूल स्ता मुवाच निशाचरीम् ।
दृष्ट्वा पुरी मिमां भद्रे पुनर्यास्ये यथागतम् ॥ ३७
ततः कृत्वा महानादं सा वै लंका भयावहम् ।
तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥ ३८
तत स्सकपिशार्दूलो लंकया ताडितो भृशम् ।
ननाद सुमहानादं वीर्यवा न्पवनात्मजः ॥ ३९
ततस्संवर्तयामास वामहस्तस्य सोऽङ्गुळीः ।
मुष्टिनाऽभिजघानैनां हनुमा न्क्रोधमूर्छितः ॥ ४०
स्त्री चेति मन्यमानेन नातिक्रोधस्स्वयं कृतः ।
सातु तेन प्रहारेण विह्वलाङ्गी निशाचरी ॥ ४१
पपात सहसा भूमौ विकृताननदर्शना ।
ततस्तु हनुमा न्प्राज्ञ स्तां दृष्ट्वा विनिपातिताम् ॥ ४२

कृपां चकार तेजस्वी मन्यमानः स्त्रियंतु ताम् ।
ततो वैभृशसंविग्ना लंका सा गद्गदाक्षरम् ॥ ४३
उवाचागर्वितं वाक्यं हनूमंतं प्लवंगमम् ।
प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम ॥ ४४
समये सौम्य तिष्ठंति सत्त्ववंतो महाबलाः ।
अहं तु नगरी लंका स्वयमेव प्लवंगम ॥ ४५
निर्जिता हं त्वया वीर विक्रमेण महाबल ।
इदं तु तथ्यं शृणु वै ब्रुवंत्या मे हरीश्वर ॥ ४६
स्वयंभुवा पुरादत्तं वरदानं यथा मम ।
यदा त्वां वानरः कश्चि द्विक्रमा द्वश मानयेत् ॥ ४७
तदा त्वया हि विज्ञेयं रक्षसां भय मागतम् ।
स हि मे समय स्सौम्य प्राप्तोऽद्य तव दर्शनात् ॥ ४८
स्वयंभूविहित स्सत्यो न तस्यास्ति व्यतिक्रमः ।
सीतानिमित्तं राज्ञस्तु रावणस्य दुरात्मनः ॥ ४९
रक्षसां चैव सर्वेषां विनाश स्समुपागतः ।
तत्प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम् ॥ ५०
विधत्स्व सर्वकार्याणि यानियानीह वांछसि ।
प्रविश्य शापोपहतां हरीश्वरः शुभां पुरीं राक्षसमुख्यपालिताम् ।
यदृच्छया त्वं जनकात्मजां सतीं विमार्ग सर्वत्र गतो यथासुखम् ॥

इति श्रीमत्सुन्दरकाण्डे तृतीयस्सर्गः ॥

## ॥ चतुर्थस्सर्गः ॥

सनिर्जित्य पुरीं श्रेष्ठां लंकां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनुमान्कपिसत्तमः ॥ १
द्वारेण स महाबाहुः प्राकार मभिपुप्लुवे ।
[निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः]
प्रविश्य नगरीं लंकां कपिराजहितंकरः ॥ २
चक्रेऽथ पादं सव्यं च शत्रूणां स तु मूर्धनि ।
प्रविष्ट स्सत्त्वसंपन्नो निशायां मारुतात्मजः ॥ ३
स महापथ मास्थाय मुक्तापुष्पविराजितम् ।
[सेवितां राक्षसै र्भीमै र्बलिभि श्शस्त्रपाणिभिः]
ततस्तु तां पुरीं लंकां रम्या मभिययौ कपिः ॥ ४
हसितोत्कृष्टनिनदै स्तूर्यघोषपुरस्सरैः ।
वज्रांकुशनिकाशैश्च वज्रजालविभूषितैः ॥ ५
गृहमेघैः पुरीरम्या बभासे द्यौ रिवांबुदैः ।
प्रजज्वाल तदा लंका रक्षोगणगृहैश्शुभैः ॥ ६
सिताभ्रसदृशै श्चित्रैः पद्मस्वस्तिकसंस्थितैः ।
वर्धमानगृहै श्चापि सर्वत स्सुविभूषिता ॥ ७
तां चित्रमाल्याभरणां कपिराजहितंकरः ।
राघवार्थं चरन् श्रीमान् ददर्श च ननंद च ॥ ८
भवना द्भवनं गच्छन् ददर्श पवनात्मजः ।
विविधाकृतिरूपाणि भवनानि ततस्ततः ॥ ९

शुश्राव मधुरं गीतं त्रिस्थानस्वरभूषितम् ।
स्त्रीणां मदसमृद्धानां दिवि चाप्सरसामिव ॥ १०
शुश्राव कांचीनिनदं नूपुराणां च निस्स्वनम् ।
सोपाननिनदांश्चैव भवनेषु महात्मनाम् ॥ ११
आस्फोटितनिनादांश्च क्ष्वेळितांश्च ततस्ततः ।
शुश्राव जपतां तत्र मंत्रान् रक्षोगृहेषु वै ॥ १२
स्वाध्यायनिरतांश्चैव यातुधानान् ददर्श सः ।
रावणस्तवसंयुक्तान् गर्जतो राक्षसानपि ॥ १३
राजमार्गं समावृत्य स्थितं रक्षोबलं महत् ।
ददर्श मध्यमे गुल्मे रावणस्य चरान्बहून् ॥ १४
दीक्षितान् जटिलान् मुंडान् गोजिनांबरवाससः ।
दर्भमुष्टिप्रहरणानग्निकुंडायुधांस्तथा ॥ १५
कूटमुद्गरपाणींश्च दण्डायुधधरानपि ।
एकाक्षानेककर्णांश्च लंबोदरपयोधरान् ॥ १६
कराळान्भुग्नवक्त्रांश्च विकटान्वामनांस्तथा ।
धन्विनः खड्गिनश्चैव शतघ्नी मुसलायुधान् ॥ १७
परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान् ।
नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् ॥ १८
नातिगौरान्नातिकृष्णान्नातिकुब्जान्न वामनान् ।
विरूपान्बहुरूपांश्च सुरूपांश्च सुवर्चसः ॥ १९
ध्वजी ^नः^ पताकिनश्चैव ददर्श विविधायुधान् ।
शक्तिवृक्षायुधांश्चैव पट्टसाशनिधारिणः ॥ २०

क्षेपणीपाशहस्तांश्च ददर्श स महाकपिः ।
स्रग्विणस्त्वनुलिप्तांश्च वराभरणभूषितान् ॥ २१
नानावेषसमायुक्तान्यथा स्वैरगतान्बहून् ।
तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान् ॥ २२
शतसाहस्रमव्यग्रमारक्षं मध्यमं कपिः ।
रक्षोधिपतिनिर्दिष्टं ददर्शांतःपुराग्रतः ॥ २३
स तदा तद्गृहं दृष्ट्वा महाहाटकतोरणम् ।
राक्षसेंद्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम् ॥ २४
पुंडरीकावतंसाभिः परिखाभिरलंकृतम् ।
प्राकारावृतमत्यंतं ददर्श स महाकपिः ॥ २५
त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम् ।
वाजिहेषितसंघुष्टं नादितं भूषणैस्तथा ॥ २६
रथैर्यानैर्विमानैश्च तथा हयगजैश्शुभैः ।
वारणैश्च चतुर्दंतैश्श्वेताभ्रनिचयोपमैः ॥ २७
भूषितं रुचिरद्वारं मत्तैश्च मृगपक्षिभिः ।
रक्षितं सुमहावीर्यैर्यातुधानैस्सहस्रशः ॥ २८
राक्षसाधिपतेर्गुप्तमाविवेश महाकपिः ।
सहेमजांबूनदचक्रवाळं महार्हमुक्तामणिभूषितांतम् ।
परार्ध्यकालागरुचंदनाक्तं स रावणांतःपुर माविवेश ॥ २९

इति श्रीमत्सुन्दरकाण्डे चतुर्थस्सर्गः ॥

## ॥ पञ्चमस्सर्गः ॥

ततस्समध्यंगतमंशुमंतं ज्योत्स्नावितानं महदुद्वमंतम् ।
ददर्श धीमान् दिवि भानुमंतं गोष्ठे वृषं मत्तमिव भ्रमंतम् ॥ १
लोकस्य पापानि विनाशयन्तं महोदधिं चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयंतं ददर्श शीतांशुमथाभियांतम् ॥ २
या भाति लक्ष्मीर्भुवि मंदरस्था तथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥ ३
हंसो यथा राजत पञ्जरस्थस्सिंहो यथा मन्दरकन्दरस्थः ।
वीरो यथा गर्वितकुञ्जरस्थश्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ॥ ४
स्थितः ककुद्मानिव तीक्ष्णशृङ्गो महाचलश्श्वेत इवोच्चशृङ्गः ।
हस्तीव जांबूनदबद्धशृङ्गो रराज चन्द्रः परिपूर्णशृङ्गः ॥ ५
विनष्टशीतांबुतुषारपङ्को महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को रराज चन्द्रो भगवान्शशाङ्कः ॥ ६
शिलातलं प्राप्य यथा मृगेन्द्रो महारणं प्राप्य यथा गजेंद्रः ।
राज्यं समासाद्य यथा नरेंद्रस्तथा प्रकाशो विरराज चन्द्रः ॥ ७
प्रकाशचंद्रोदयनष्टदोषः प्रवृत्तरक्षःपिशिताशदोषः ।
रामाभिरामेरितचित्तदोषः स्वर्गप्रकाशो भगवान् प्रदोषः ॥ ८
तंत्रीस्वनाः कर्णसुखाः प्रवृत्ताः स्वपंति नार्यः पतिभिस्सुवृत्ताः ।
नक्तंचराश्चापि तथा प्रवृत्ता विहर्तुमत्यद्भुतरौद्रवृत्ताः ॥ ९
मत्तप्रमत्तानि समाकुलानि रथाश्वभद्रासनसंकुलानि ।
वीरश्रियाचापि समाकुलानि ददर्श धीमान् स कपिः कुलानि ॥

परस्परं चाधिकमाक्षिपंति भुजांश्च पीनानधिकं क्षिपंति ।
मत्तप्रलापानधिकं क्षिपंति मत्तानि चान्योन्यमधिक्षिपंति ॥ ११
रक्षांसि वक्षांसि च विक्षिपंति गात्राणि कांतासु च विक्षिपंति ।
रूपाणि चित्राणि च विक्षिपंति दृढानि चापानि च विक्षिपंति ॥
ददर्श कांताश्च समालभंत्यस्तथापरास्तत्र पुनस्स्वपंत्यः ।
सुरूपवक्त्राश्च तथा हसंत्यः क्रुद्धाः पराश्चापि विनिश्श्वसंत्यः ॥ १३
महागजैश्चापि तथा नदद्भिस्सुपूजितैश्चापि तथा सुसद्भिः ।
रराज वीरैश्च विनिश्श्वसद्भिर्ह्रदो भुजङ्गैरिव निश्श्वसद्भिः ॥ १४
बुद्धिप्रधानान्रुचिराभिधानान्संश्रद्दधानाञ्जगतः प्रधानान् ।
नानाविधानान्रुचिराभिधानान्ददर्श तस्यां पुरियातुधानान् ॥ १५
ननंद दृष्ट्वा स च तान्सुरूपान्नानागुणानात्मगुणानुरूपान् ।
विद्योतमानान्स तदानुरूपान्ददर्श कांश्चिच्च पुनर्विरूपान् ॥ १६
ततो वरार्हास्सुविशुद्धभावास्तेषां स्त्रियस्तत्र महानुभावाः ।
प्रियेषु पानेषु च सक्तभावा ददर्श तारा इव सुप्रभावाः ॥ १७
श्रिया ज्वलंती स्त्रपयोपगूढा निशीथकाले रमणोपगूढाः ।
ददर्श काश्चित्प्रमदोपगूढा यथा विहंगाः कुसुमोपगूढाः ॥ १८
अन्याः पुनर्हर्म्यतलोपविष्टास्तत्र प्रियांकेषु सुखोपविष्टाः ।
भर्तुः प्रिया धर्मपरा निविष्टा ददर्श धीमान्मदनाभिविष्टाः ॥ १९
अप्रावृताः कांचनराजिवर्णाः काश्चित्परार्ध्यास्तपनीयवर्णाः ।
पुनश्च काश्चिच्छशलक्ष्मवर्णाः कांतप्रहीणा रुचिरांगवर्णाः ॥ २०
ततः प्रियान्प्राप्य मनोभिरामास्सुप्रीतियुक्ताः प्रसमीक्ष्य रामाः ।
गृहेषु हृष्टाः परमाभिरामा हरिप्रवीरस्स ददर्श रामाः ॥ २१

